हैं। यथा—पञ्चन्+ति—टिलोप=कुत्व। पंक्तिः।

२७७ **पदस्य** ८।१।१६ इतोऽग्रे वक्ष्यमाणानि कार्याणि पदस्य भवन्ति। अर्थात् यहाँ से आगे जितने भी कार्य होंगे सभी पद को होंगे। यथा—पचत्+सु= पचन्त+सु—त का संयोगान्त लोप=पचन्।

२७८ **परश्च** ३।१।२ प्रकृतितः ५।१ [प्रत्ययाः] परे १।३ भवन्ति। प्रत्ययाः प्रकृतितः परे भवन्ति। अर्थात्—राम+सु=रामः। यह अधिकार सूत्र है। पाँचवें अध्याय तक जाता है।

२७९ **पर्वताच्च** ४।२।१४३ पर्वतात् प्रातिपदिकात् ५।१ तत्रभवाद्यर्थे ७।१ छ प्रत्ययः १।१ भवति। प्रातिपदिकात् तत्रभवाद्यर्थे छः प्रत्ययो भवति। अर्थात् पर्वत प्रातिपदिक से छ प्रत्यय होता है। पर्वत+छ=ईय=पर्वतीयः।

२८० **पञ्चम्यास्तसिल्** ५।३।७ पञ्चम्यन्तात् ५।१ किंसर्वनामबहुभ्योऽद्वयादिभ्यः ५।३ प्रातिपदिकेभ्यः ५।३ तसिल् १।१ प्रत्ययो भवति। पञ्चम्यन्तेभ्यः प्रातिपदिकेभ्यः तसिल् प्रत्ययो भवति। अर्थात् पञ्चम्यन्त प्रातिपदिक से तसिल् प्रत्यय होता है। यद्+तसिल्, य+अ+तसिल्=यतः।

२८१ **पृथ्वादिभ्य इमनिज्वा** ५।१।१२२ तस्य भाव इत्यर्थे ७।१ पृथ्वादिभ्यः ५।३ प्रातिपदिकेभ्यः ५।३ इमनिच् प्रत्ययो भवति। तस्य भावे अर्थे पृथ्वादिभ्यः इमनिच् प्रत्ययो भवति। 'उसकी सत्ता' इस अर्थ में पृथु आदि से इमनिच् प्रत्यय होता है।

२८२ **पुगन्तलघूपधस्य च** ७।३।८६ सार्वधातुक+आर्धधातुकयोः ७।२ पुगन्तलघूपधस्य ६।१ अङ्गस्य ६।१ इकः ६।१ गुणः। सार्वधातुके आर्धधातुके परतः पुगन्तस्य लघूपधस्य च अङ्गस्य गुणो भवति। अर्थात् सार्वधातुक आर्धधातुक परे रहते पुक् अन्त वाले तथा लघु संज्ञक उपधा वाले अङ्ग को गुण होता है।

२८३ **पूर्वत्रासिद्धम्** ८।२।१ पूर्वत्र ७।३ [सपादसप्ताध्यायीषु] असिद्धम् १।१ [त्रिपादी] अधिकारपक्षे सर्वत्र सूत्रेषु अयमेवार्थः [सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा। त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रम् असिद्धम्। अर्थात् सवा सात अध्याय के सूत्रों के कार्य के प्रति त्रिपादी सूत्र के कार्य असिद्ध हो जाते हैं। त्रिपादियों में भी पूर्व सूत्र के प्रति पर सूत्र असिद्ध हो जाता है। अस्मै+उद्धर=आय्=य लोप= अस्मा उद्धर=यहाँ गुण नहीं होता है। क्योंकि य लोप असिद्ध है। यह परिभाषा रूपी अधिकार सूत्र है। अर्थात् दोनों काम करता है। जब ७।२।१ पर बैठा हुआ

बोलता है कि पूर्वत्र=पूर्व सूत्रों में हमारे आगे आने वाले तीन पाद के सूत्र असिद्ध हैं। जब अधिकार होता है तो आगे के सूत्रों पर जा-जाकर बैठकर बोलता है कि त्वं पूर्वत्र असिद्धम्—तुम पूर्व सूत्र में असिद्ध हो, सूत्रार्थ यही है। भावार्थ सूत्र का बताया गया है—परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः—अर्थात् पूर्वापर-भाव में सपाद सप्ताध्याय तक पूर्व सूत्र को असिद्ध कर पर सूत्र लगेगा, पर त्रिपादी में पर सूत्र को असिद्ध कर पूर्व सूत्र लगेगा। यों ही सप्ताध्यायी ८।१।७४ तक के सूत्रों से त्रिपादी सूत्रों की मुठभेड़ होने पर त्रिपादी पर होते हुए भी असिद्ध होंगे। यों पर का नित्य के साथ विरोध होने पर नित्य बली, पर नित्य का अन्तरङ्ग के साथ विरोध होने पर अन्तरङ्ग बली। पर नित्य अन्तरङ्ग का अपवाद से विरोध होने पर अपवाद ही बली होता है। यही पाणिनि का दुर्बलरक्षाशय है। कृताकृतप्रसङ्गो विधिर्नित्यः। निर्निमित्तो विधिरन्तरङ्गः। निरवकाशो विधिरपवादः। ये इनके लक्षण हैं। गुरु जी से समझिये।

२८४ **पूर्वोऽभ्यासः** ६।१।४ [अस्मिन् द्वित्वे प्रकरणे ये द्वे विहिते तयोः] पूर्वस्य ६।१ अभ्यासः १।१ [संज्ञा भवति] अस्मिन् प्रकरणे ये द्वे विहिते तयोः पूर्वस्य अभ्याससंज्ञा भवति। यथा—पच्+अ=पच्+पच्+अ पूर्व की अभ्यास संज्ञा और कार्य=पपाच।

२८५ **प्रथमयोः पूर्वसवर्णः** ६।१।१०२ अकः ५।१ अचि ७।१ प्रथमयोः ६।२ पूर्वपरयोः ६।२ [स्थाने] एकः १।१ भवति। प्रथमा-द्वितीययोः अजादौ विभक्तौ परतः अकः पूर्वसवर्णदीर्घ एकादेशो भवति। अर्थात् प्रथमा द्वितीया सम्बन्धी अजादि विभक्ति परे हो तो पूर्व पर के स्थान में पूर्वसवर्ण दीर्घ एकादेश होता है। अग्नि+औ=दीर्घ।

२८६ **परोक्षे लिट्** ३।२।११५ अनद्यतने ७।१ भूते ७।१ परोक्षे ७।१ [अर्थे] लिट् प्रत्ययः परः १।१ भूतानद्यतनपरोक्षार्थवृत्तेर्धातोः लिट् स्यात्। अर्थात् अनद्यतन परोक्ष को कहने के लिए धातु से लिट् लकार होता है। यथा—भू+अ=वुक्=द्वित्व=संज्ञा अभ्यास कार्य=बभूव।

२८७ **प्रादयः** १।४।५८ क्रियायोगे ७।१ प्रादयः १।३ उपसर्गाः १।३ भवन्ति। प्रादयो निपात-संज्ञकाः क्रियायोगे उपसर्गा भवन्ति। अर्थात् प्रादि की निपात संज्ञा होती है पर क्रिया के साथ वे उपसर्ग कहे जाते हैं।

२८८ **प्रत्ययोत्तरपदयोश्च** ७।२।९८ प्रत्ययोत्तरपदयोश्च ७।२ युष्मदस्मदोः ६।२ मपर्यन्तस्य ६।१ त्वमौ १।२ भवतः। प्रत्यये उत्तरपदे च परतः युष्मदस्मदोः मपर्यन्तस्य त्व, म आदेशौ भवतः। अर्थात् प्रत्यय तथा उत्तरपद परे रहते युष्मद् अस्मद्

शब्द के मपर्यन्त भाग को त्व, म आदेश होते हैं। युष्मद्+छ=ईय=त्वदीय; अस्मद् +छ=ईय=मदीय।

२८९ **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** २।३।४६ प्रातिपदिकार्थमात्रे ७।१ प्रथमा १।१ प्रातिपदिकार्थमात्रे [सत्ता] लिङ्गमात्रे परिमाणमात्रे [तोलना] वचनमात्रे प्रथमा विभक्तिर्भवति। प्रातिपदिकार्थमात्र में, लिङ्गमात्र में, परिमाणमात्र में, संख्यामात्र में प्रथमा विभक्ति होती है। यथा—उच्चैः कृष्णः तटः तटी तटम् द्रोणो व्रीहिः एकः द्वौ बहवः।

२९० **प्रत्ययलोपे प्रत्ययलक्षणम्** १।१।६२ प्रत्ययलोपे ७।१ प्रत्ययलक्षणं १।१ प्रत्ययस्य लोपे सति प्रत्यय-निमित्तं कार्यं भवति। अर्थात् प्रत्यय के लोप हो जाने पर उस प्रत्यय को मान कर जो कार्य होता हैं वह हो जाता है। यथा सोमसुत्—यहाँ क्विप् लुप्त है फिर भी तुक् रूप कार्य होता है।

२९१ **प्वादीनां ह्रस्वः** ७।३।८० शिति ७।१ प्वादीनां ६।३ ह्रस्वः १।१ शिति परतः प्वादीनां ह्रस्वो भवति। पू आदिर्येषां ते प्वादयः तेषां प्वादीनाम पू+ना+ति=पुनाति।

## ब

२९२ **बहुगणवतुडति संख्या** १।१।२३ बहुगणशब्दौ वतुडतिप्रत्ययान्तौ च शब्दौ संख्यासंज्ञका भवन्ति। यथा—बहुशः, गणकः, गमधा, कतिधा, कतिकः कतिशः आदि।

२९३ **बहुवचने झल्येत्** ७।३।१०३ झलि ७।१ बहुवचने ७।१ अदन्तस्य ६।१ अङ्गस्य ६।१ एकारादेशो भवति। बहुवचने झलादौ सुपि परतः अकारान्तस्य अङ्गस एकारादेशो भवति। अर्थात् झलादि बहुवचन परे हो तो अकारान्त अङ्ग को एकार देश होता है। राम+भ्यस्=एत्व=रु=विसर्ग=रामेभ्यः।

२९४ **बहुषु बहुवचनम्** १।४।२१ बहुषु ७।१ बहुवचनम् १।१ भवति। बहुत्व विवक्षायां बहुवचनं भवति। बहुत्व की विवक्षा में बहुवचन होता है। यथा—राम+ अस्=दीर्घ=रामास्—रु=विसर्ग रामाः।

२९५ **ब्रुव ईट्** ७।३।९३ ब्रुवः ५।१ हलादेः ६।१ पितः ६।१ सार्वधातुक ६।१ ईट् १।१ भवति। ब्रुवः परस्य हलादेः पितः सार्वधातुकस्य ईट् आगमो भवति अर्थात् ब्रुव अङ्ग से परे हलादि पित् सार्वधातुक को ईट् आगम होता है। ब्रू+ =ब्रू+ईट्+ति=ब्रो ई ति अवादेश=ब्रवीति।

२९६ **ब्रुवः पञ्चानामादित आहो ब्रुवः** ३।४।८४ ब्रुवः ५।१ धातोः ५

परेषां ६।३ लटः ६।१ [स्थाने] परस्मैपदानाम् ६।३ आदितः ५।१ पञ्चानां ६।३ क्रमात् णलादयः पञ्च स्युः, ब्रुवः आहः आदेशः स्यात् । अर्थात् ब्रुवः धातोः परस्य लटः स्थाने परस्मैपदसंज्ञकानां तिबादीनां पञ्चानां णलादयः स्युः धातोश्च आह आदेशो भवति । अर्थात् ब्रू धातु से परे लट् लकार के स्थान में परस्मैपद संज्ञक आदि के पांच आदेश (तिप्, तस्, झि, सिप्, थस्) को क्रम से णल् अतुस् उस् थल् अथुस् आदेश होते हैं ।[1] ब्रू धातु को आह आदेश होता है । यथा—ब्रू+तिप्=ब्रू+णल् =ब्रू+अ=आह=आह ।

भ

२९७ भस्य ६।४।१२९ भस्य ६।१ अध्यायपर्यन्तम् अधिकारोऽयम् । अर्थात् यहाँ से आगे अध्याय की समाप्ति तक भसंज्ञक का कार्य होगा ।

२९८ भावकर्मणोः १।३।१३ धातोः ५।१ भावकर्मणोः ७।२ आत्मनेपदं १।१ भवति । अर्थात् भाववाच्य तथा कर्मवाच्य में धातु से आत्मनेपद होता है । यथा—गम्यते ।

२९९ भावे ३।३।१८ धातोः ५।३ भावे ७।१ घञ् १।१ प्रत्ययः १।१ भवति । भावे अर्थे धातोर्घञ् प्रत्ययो भवति । यथा—पच्+घञ्=अ=आदिवृद्धि =कुत्व=पाकः ।

३०० भावे च ४।४।१४४ शिवशमरिष्टेभ्यः ५।१ षष्ठीसमर्थेभ्यः प्रातिपदिकेभ्यः ५।३ भावे ७।१ छन्दसि ७।१ तातिल् प्रत्ययः १।१ भवति । षष्ठीसमर्थेभ्यः शिव शम् अरिष्ट इत्येतेभ्यः प्रातिपदिकेभ्यः भावेऽर्थे तातिल् प्रत्ययो भवति । यथा—शिवस्य भावः शिव+तातिल्=शिवतातिः ।

३०१ भूवादयो धातवः १।३।१ (क्रियावाचिनः) भूवादयो १।३ धातवः १।३ क्रियावाचिनो भ्वादयो धातुसंज्ञका भवन्ति । क्रियावाचिनो भ्वादयो धातुसंज्ञका भवन्ति । अर्थात् क्रियावाची भू आदि की धातु संज्ञा होती है । यथा—भू—भवति —पचति ।

३०२ (क) भोभगोअघोअपूर्वस्य योऽशि ८।३।१७ अशि १।७ भोभगोअपूर्वस्य रोः यः १।१ भवति । अशि परतः भो भगो अघो अपूर्वस्य रो रेफस्य यकारादेशो भवति । अर्थात् अश् परे रहते भो भगो, अघो अवर्ण पूर्व में है जिस रु के उसके र् को यकार आदेश होता है । यथा—भोस् अत्र=भोरु+अत्र=भोय्+अत्र=भो अत्र ।

१ टिप्पणी—भोश्च भगोश्च अघोश्च अश्च इति भो……आः । ते पूर्वे यस्य सः भो — अपूर्वः तस्य अपूर्वस्य इति द्वन्द्वगर्भो बहुव्रीहिः ।

(ख) भोभगोअघो अ-पूर्वयोः यकारवकारयोः लोपो भवति। अर्थात् अश् परे रहते भो भगो अघो और अपूर्व वाले पदान्त यकारवकार का लोप होता है। शाकल्य ऋषि के मत में। यथा—द्वौ+अत्र=द्वाव्+अत्र—व् लोप=द्वा अत्र।
म

३०३ मध्यान्मः ४।३।८ मध्यात् ५।१ प्रातिपदिकात् ५।१ मः १।१ प्रत्ययः १।१ मध्यात् प्रातिपदिकात् भवेऽर्थे मः प्रत्ययो भवति। अर्थात् मध्य प्रातिपदिक से होने अर्थ में म प्रत्यय होता है। मध्य में जो हो वह मध्यम कहाता है।

३०४ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९ अयवादिभ्यः ५।१ मात् ५।१ उपधायाः ५।१ मतोः ६।१ वः १।१ मकारान्तात् मकारोपधात् च अवर्णन्तात् अवर्णोपधाच्च प्रातिपदिकात् परस्य मतोर्व आदेशो भवति यवादिभ्यस्तु उत्तरस्य न भवति। अर्थात् यकारान्त एवं अवर्णान्त एवं मकार एवं अवर्ण उपधा वाले प्रातिपदिक से परे मतुप् को वकार आदेश होता है। किन्तु यवादि शब्दों से उत्तर मतुप् को व नहीं होता। यथा—किम्+मतुप्=किम्+मत्=म को व अनुस्वार किंवत्। उपधा दीर्घ नुम्=त लोप किंवान्।

३०५ मिदचोऽन्त्यात् परः १।१।४७ अन्त्यात् ५।१ अचः ५।१ परः १।१ मित् १।१ भवति। अचां मध्ये यो अन्त्यः अच् तस्मात् परो मित् भवति। यथा—भिद्+ति भिनद्+ति=भिनत्ति।

३०६ मुखनासिकावचनोऽनुनासिकः १।१।८ मुखनासिकावचनः १।१ वर्णः १।१ अनुनासिकः १।१ भवति। मुखसहितनासिकया उच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। मुखेन सहिता नासिका। उच्यते इति वचनम्। मुखनासिकया वचनं यस्य सः सः मुखनासिकावचनः [इति बहुव्रीहि]। अर्थात् मुख सहित नासिका से उच्चार्यमाण वर्ण की अनुनासिक संज्ञा होती है। यथा—ञ म ङ ण न।

३०७ मोऽनुस्वारः ८।३।२३ हलि ७।१ पदान्तस्य ६।१ मः ६।१ अनुस्वारः १।१ भवति। हलि परतः पदान्तस्य मकारस्य अनुस्वारादेशो भवति। अर्थात् हल् परे रहते पदान्त मकार को अनुस्वार आदेश होता है। यथा—कुवडं हसति। हरिं वन्दे।

३०८ मेर्निः ३।४।८९ लोटः ६।१ मेः ६।१ निः १।१ स्यात् लोटो मेर्निः स्यात् अर्थात् लोट स्थानिक मि को नि होता हैं। भवामि=भवानि।

य

३०६ यः सौ ७।२।११० सौ ७।१ इदमः ६।१ दः ६।१ यः १।१ सौ विभक्तौ परतः इदमो दकारस्य यकारादेशो भवति। सु विभक्ति परे रहते इदम् के दकार के स्थान में यकारादेश होता है। इदम्+सु=द को य सु लोप=इयम्।

३१० यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३९ यत्तदेतेभ्यः ५।३ परिमाणे ७।१ वतुप् १।१ प्रथमा समर्थेभ्यः यद् तद् एतद् इत्येतेभ्यः प्रातिपदिकेभ्यः वतुप् प्रत्ययो भवति। अर्थात् प्रथमा समर्थ यद् तद् एतद् प्रातिपदिक से वतुप् प्रत्यय होता है। यथा—यत्+वतुप्=दीर्घ=यावत्+नुम्—तलोप=यावान्।

३११ यरोऽनुनासिकेऽनुनासिको वा ८।४।४५ अनुनासिके ७।१ पदान्तस्य ६।१ यरः ६।१ अनुनासिकः १।१ वा। अनुनासिके परे पदान्तस्य यरः अनुनासिको वा भवति। अर्थात् अनुनासिक परे रहते पदान्त यर् को अनुनासिक विकल्प से होता है। वाग्+नयति=वाङ्नयति।

३१२ यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३ यस्मात् ५।१ प्रत्ययविधिः* १।१ प्रत्यये ७।१ तदादि १।१ अङ्गम् १।१ यस्मात् प्रत्ययो विधीयते तस्य तदादेश्च तस्मिन् प्रत्यये परतः अङ्गसंज्ञा भवति। अर्थात् जिस प्रकृति से प्रत्यय का विधान किया जाए उस प्रत्यय के परे रहते उस प्रकृति की अङ्ग संज्ञा होती है। यथा— राम+आम्=में राम की अङ्ग संज्ञा होती है।

३१३ यस्येति च ६।४।१४८ तद्धिते ७।१ ईति ७।१ भस्य ६।१ यस्य *६।१ लोपः १।१ इवर्णान्तस्य अवर्णान्तस्य च अङ्गस्य लोपो भवति ईकारे तद्धिते च परतः। अर्थात् ईकार और तद्धित परे रहते इवर्णान्त तथा अवर्णान्त भसंज्ञक अङ्ग का लोप भी होता है। दक्ष+इञ्=आदिवृद्धि भसंज्ञा=इ लोप ङीप् दाक्षी।

३१४ याडापः ७।३।११३ आपः ५।१ अङ्गात् ५।१ ङितः ६।१ याडागमः १।१ भवति। आबन्तात् अङ्गात् परस्य ङितः प्रत्ययस्य याडागमो भवति। अर्थात् आबन्त अङ्ग से परे ङित् प्रत्यय को याट् का आगम होता है। रमा+ङे=रमा+ याट्। रमाया+ए=वृद्धिः=रमायै। रमा+ङि(=आम्)=रमा याट् आम्=रमायाम्

---

*प्रत्ययस्य विधिः [प्रत्ययविधिः] स आदिः यस्य=तदादि तदादि शब्दस्वरूपम् इति बहुव्रीहिः।

*इश्च अश्च तयोः समाहारः यम्, तस्य।

३१५ **यासुट् परस्मैपदेषूदात्तो ङिच्च** ३।४।१०३ परस्मैपदविषयस्य लिङो यासुडागमो भवति स च उदात्तो भवति ङिच्च। परस्मैपदेषु ७।३ लिङः ६।१ यासुड् १।१ उदात्तः १।१ ङिच्च १।१ अर्थात् परस्मैपदविषयक लिङ् लकार को यासुट् का आगम होता है और वह उदात्त तथा ङित् होता है। भू+लिङ्=भू+यासुट्+ति =भूयात्।

३१६ **युवोरनाकौ** ७।१।१ अङ्गयोः ६।२ युवोः ६।२ अनाकौ १।२ अङ्ग-सम्बन्धिनोः युवु एतयोः स्थाने क्रमात् अन अक आदेशौ भवतः। अर्थात् अङ्ग सम्बन्धी यु तथा वु को क्रम से अन तथा अक आदेश होता है। यथा—कृ+वु= अक=वृद्धि=कारकः। गम्+यु=अन=गमनम्।

३१७ **युष्मदस्मदोरन्यतरस्यां खञ् च** ४।३।१ शेषे अर्थे युष्मदस्मदोः ६।२ अन्यतरस्याम् खञ् छः च प्रत्ययौ भवतः। युष्मद् अस्मद् शब्दाभ्याम् खञ् छौ प्रत्ययौ भवतः। अर्थात् युष्मद् तथा अस्मद् शब्द से खञ् तथा छ प्रत्यय होता है। युष्मद् को युष्माक आदेश, ख को ईन आदेश=आदि वृद्धिः यौष्माकीणः। आस्माकीनः।

## र

३१८ **रलो व्युपधाद्धलादेः संश्च** १।२।२६ उकारोपधात् इकारोपधात् रलन्तात् हलादेः धातोः परः सेट् सन् सेट् क्त्वा च वा कितौ न भवतः। अर्थात् उकार इकार उपधा वाले रलन्त एवं हलादि धातुओं से परे सेट् सन् सेट् क्त्वा प्रत्यय विकल्प से कित् नहीं होते। यथा लिखित्वा—लेखित्वा।

३१९ **रात्सस्य** ८।२।२४ संयोगान्तं यत् पदम् तस्य ६।१ रात् ५।१ परस्य सस्यैव ६।१ लोपः १।१ नान्यस्य ६।१ संयोगान्तस्य पदस्य यो रेफः तस्मात् उत्तरस्य सस्यैव लोपो भवति नान्यस्य। अर्थात् संयोगान्त पद का जो रेफ है उससे परे सकार का ही लोप होता है दूसरे का नहीं। यथा—मातृ+ङस्=अस्=उ र पर स् लोप रेफ विसर्ग=मातुः।

३२० **राष्ट्रावारपाराद् घखौ** ४।२।९३ राष्ट्रावारपारात् ५।१ प्रातिपदिकात् ५।१ घखौ १।१ शेषे अर्थे ७।१ भवतः। राष्ट्र अवार पार शब्दाभ्यां घखौ प्रत्ययौ भवतः अर्थात् राष्ट्र तथा अवारपार शब्द से शेष अर्थ में घ ख प्रत्यय होता है। राष्ट्र+घ–इय=भ संज्ञा=अ लोप=राष्ट्रियः।

३२१ **रिङ् शयग्लिङ्क्षु** ७।४।२८ शयग् लिङ्क्षु ७।३ ऋतः ६।१ रिङ् १।१ शे यकि लिङि च, यकारादौ असार्वधातुके परतः ऋकारान्तस्य अङ्गस्य रिङ्

आदेशो भवति। अर्थात् यकारादि असार्वधातुक लिङ् और श यक् परे रहते ऋकारान्त अङ्ग को रिङ् आदेश होता है। यथा—आ+दृ+ते+आदृ+अ+ते=आ+द्+रिङ्+ते=आ+द्+रि+अ+ते इयङ् आद्रियते।

३२२ **रुदश्च पञ्चभ्यः** ७।३।९८ रुदश्च ५।३ पञ्चभ्यः ५।३ हलादेः अपृक्तस्य ६।१ सार्वधातुकस्य ६।१ ईट् १।१ भवति। रुदादिभ्यः पञ्चभ्यः परस्य हलादेरपृक्तस्य सार्वधातुकस्य ईडागमो भवति। अर्थात् रुदिर् इत्यादि पाँच धातुओं से परे हलादि अपृक्त सार्वधातुक को ईट् का आगम होता है। यथा—रुद्+लङ् त्=अट्+रुद्+त्=अ+रुद्+ईट्+त्=अरोदीत्।

३२३ **रुधादिभ्यः श्नम्** ३।१।७८ रुधादिभ्यः ५।३ धातुभ्यः ५।३ कर्तृवाचिनि सार्वधातुके परतः श्नम् १।१ प्रत्ययो भवति। अर्थात् रुधादि धातुओं से कर्तृवाची सार्वधातुक से परे रहते श्नम् प्रत्यय होता है। यथा—भि+नद्+ति=भिनत्ति।

३२४ **रुदादिभ्यः सार्वधातुके** ७।२।७६ रुदादिभ्यः ५।३ धातुभ्यः ५।३ वलादेः सार्वधातुकस्य ६।१ इट् १।१ भवति। रुदादिभ्यः पञ्चभ्यो धातुभ्यः परस्य वलादेः सार्वधातुकस्य इडागमो भवति। अर्थात् रुदादि पाँच धातुओं से परे वलादि सार्वधातुक को इट् का आगम होता है। यथा—रुद्+ति=रुद्+इट्=रोदिति।

३२५ **रोः सुपि** ८।३।१६ सुपि ७।१ रोः ६।१ एव विसर्जनीयः १।१ सुपि परे रोः रेफस्यैव विसर्जनीयादेशो भवति। अर्थात् सुप् परे हो तो रु के ही र् को विसर्ग होता है। यथा—पयरु+सुप्=पयः सु=पयःसु।

३२६ **रो रि** ८।३।१४ रि ७।१ रः ६।१ लोपः १।१ भवति। रेफे परतः रेफस्य लोपो भवति। अर्थात् रेफ परे रहते पद के रेफ का लोप होता है। पुनर्+रमते=र् लोप दीर्घ=पुनारमते।

## ल

३२७ **लः कर्मणि च भावे चाकर्मकेभ्यः** ३।४।६९ अकर्मकेभ्यः ५।३ धातुभ्यः ५।३ कर्तरि ७।१ भावे ७।१ सकर्मकेभ्यः धातुभ्यः ५।३ कर्तरि कर्मणि च लः भवन्ति। लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युः अकर्मकेभ्यो भावे कर्तरि च। अर्थात् लकार सकर्मक धातुओं से कर्ता और कर्म में होते हैं और अकर्मक धातुओं से भाव और कर्ता में।

३२८ **लः परस्मैपदम्** १।४।९९ लः ६।१ स्थाने ७।१ आदेशः १।१ परस्मैपदम् १।१ भवति। लकार स्थानिका आदेशाः परस्मैपदसंज्ञका भवन्ति। अर्थात्

लकार के स्थान में हुये १८ आदेशों की परस्मैपद संज्ञा होती है। ये सूत्र प्रत्यय बनाता है। तङ् की आत्मनेपद संज्ञा होने से पूर्व के नव ही इसे मिलते हैं।

३२९ **लङः शाकटायनस्यैव** ३।४।१११ आतः ५।१ धातोः ५।१ झेः ६।१ जुस् १।१ शाकटायनस्य मते। आकारान्तात् परस्य लङादेशस्य झेर्जुस् आदेशो भवति शाकटायनस्य मते। अर्थात् आकारान्त धातुओं से परे लङ् के स्थान में हुए झि को जुस् आदेश होता है आचार्य शाकटायन के मत में—या+लङ्=अट्+या+झि=अ+या+जुस्=अ+य्+उस्=अयुस्=अयुः।

३३० **लटः शतृशानचावप्रथमासमानाधिकरणे** ३।२।१२४ धातोः ५।१ वर्तमाने ७।१ लटः ६।१ शतृशानचौ १।२ अप्रथमासमानाधिकरणे सति। धातोर्लटः स्थाने शतृशानचावादेशौ वर्तमाने काले भवतः प्रथमान्तेन चेत् तस्य सामानाधिकरण्यं न स्यात्। अर्थात् धातु से लट् के स्थान में शतृ तथा शानच् आदेश वर्तमान काल में होते हैं। पचन्तं देवदत्तं पश्य=[पकाते हुए देवदत्त को देखो]।

३३१ **लस्य** ३।४।७७ अधिकारोऽयम् ३।४।११७ यावत् धातोः लस्य तिबादयः आदेशाः भवन्ति। धातु से विहित दसों लकारों के स्थान में तिबादि १८ आदेश होते हैं। भू+अ+ति=भवति।

३३२ **लशक्वतद्धिते** १।३।८ उपदेशे ७।१ प्रत्ययस्य ६।१ आदिः १।१ लशकु १।१ इत् भवति। प्रत्ययाद्या लशकवर्गाः इतः स्युः। अर्थात् प्रत्यय के आदि ल, श, कवर्ग की इत् संज्ञा होती है। ल्युट् शस् ङे ङसि ङस् इत्यादि के आदि अक्षरों की इत्संज्ञा करके लोप होता है।

३३३ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ** ३।३।१३९ धातोः ५।१ लिङ्निमित्ते क्रियातिपत्तौ सत्यां धातोर्लृङ् प्रत्ययो भवति। अर्थात् भविष्यत् काल में लिङ् का निमित्त होने पर क्रिया की सिद्धि गम्यमान न हो तो धातु से लृङ् प्रत्यय होता है।

३३४ **लिङः सलोपोऽनन्त्यस्य** ७।२।७९ सार्वधातुके ७।१ अनन्त्यस्य ६।१ सस्य ६।१ लोपः १।१ भवति। सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति। यथा—लिङ् के यासुट् के अनुबन्ध का लोप करके यास्+त में स् का लोप करके यात याताम् युः। इत्यादि प्रत्ययों में इसी से स् लोप होता है।

३३५ **लिङर्थे लेट्** ३।४।७ धातोः ५।१ लिङर्थे ७।१ लेट् १।१ भवति। छन्दसि विषये धातोः लिङर्थे लेट् प्रत्ययो भवति। अर्थात् लिङ् के अर्थ में लेट् प्रत्यय होता है। यह सूत्र प्रत्यय बनाता है।

३३६ **लुङ्** ३।२।११० धातोः ५।१ भूते ७।१ लुङ् १।१ भवति। अनद्यतने भूते धातोर्लुङ् स्यात्। अनद्यन भूत अर्थ में धातु से लुङ् लकार होता है। यह सूत्र

प्रत्यय बनाता है।

३३७ **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ६।४।७१ लुङ् लङ् लृङ्क्षु ७।३ धातोः ६।१ अट् १।१ उदात्तः १।१ भवति। लुङ् लङ् लृङ् इत्येतेषु परतः अङ्गस्य अट् आगमो भवति। अर्थात् लुङ् लङ् तथा लृङ् के परे रहते अङ्ग को अट् का आगम होता है। और वह उदात्त होता है। यथा—भू+लुङ्=भू+त्=भू+सिच्+त्, सिच् लोप=अट्+भू+त्=अभूत्।

३३८ **लृट् शेषे च** ३।३।१३ धातोः ५।३ भविष्यति ७।१ शेषे ७।१ लृट् १।१ प्रत्ययो १।१ भवति। क्रियायां क्रियार्थायाम् उपपदे भविष्यति काले धातोर्लृट् प्रत्ययो भवति। अर्थात् केवल भविष्यत् काल में तथा क्रियार्थ क्रिया उपपद रहते धातु से लृट् लकार होता है। यह सूत्र भी प्रत्यय बनाता है।

३३९ **लृटः सद्वा** ३।३।१४ धातोः ५।१ लृटः ६।१ स्थाने ७।१ सत् १।१ वा [अ०] भवति। भविष्यति कालेऽर्थे गम्यमाने विहितस्य लृटः स्थाने शतृशानचावादेशौ वा भवतः। अर्थात् भविष्यत् काल अर्थ गम्यमान होने पर धातु से विहित लृट् के स्थान में शतृ शानच् आदेश होते हैं विकल्प से। यथा—करिष्यन्तं करिष्यमाणं वा देवदत्तं पश्य। (जो करेगा ऐसे देवदत्त को देखो।)

३४० **लोट् च** ३।३।१६२ धातोः ५।१ लिङर्थे ७।१ विध्यादिषु लोट् १।१ भवति।

विधि [प्रेरणा] निमन्त्रण आमन्त्रण (कामचारानुज्ञा यथेच्छा) अधीष्ट [सत्कार पूर्वक भोजनादि में प्रवृत्ति] सम्प्रश्न प्रार्थना आदि अर्थों में लोट् लकार का प्रयोग होता है। यह सूत्र भी प्रत्यय बनाता है। द्र० सू० ३५२

३४१ **लोटो लङ्वत्** ३।४।८५ लोटः ६।१ लङ्वत् [अ०] कार्यम् भवति। लोटः लकारस्य लङ्वत् कार्यं भवति। अर्थात् लोट् लकार को लङ् के समान कार्य होते हैं। पच्+लोट्=तस्=ताम् पचताम्।

३४२ **लोपः शाकल्यस्य** ८।३।१९ अशि ७।१ भो भगो अघो अ पूर्वयोः व्योः ६।२ लोपः १।१ शाकल्यस्य ६।१ मते भवति। अशि परतः पदान्तयोः वकारयकारयोः लोपः भवति अतद्धिते तद्धितं वर्जयित्वा। अश् परे रहते भोस् भगोस् अघोस् है पूर्व जिनके ऐसे पदान्त यकारवकार का लोप होता हे शाकल्य के मत में

३४३ **लोपो व्योर्वलि** ६।१।६६ वलि ७।१ व्योः ६।२ लोपः १।१ भवति। वलि परतः वकारयकारयोः लोपो भवति। अर्थात् वल् परे रहते वकार और यकार

का लोप होता है। यथा—युवतिर्जाया यस्य स युवजानिः युवति सु जाया सु=समास सुप् लुक्=युवति जाया निङ्=पुंवत्भाव= युवन् जाया निङ् य् लोप न् और ङ् लोप= युवजानिः [युवति है स्त्री जिसकी]

३४४ **लोपश्चास्यान्यतरस्यां म्वोः** ६।४।१०७ म्वोः ७।२ असंयोगपूर्वस्य ६।१ अन्यतरस्याम् (अ०) लोपः १।१ भवति। असंयोग पूर्वो योऽयमुकारः तदन्तस्य प्रत्ययस्य लोपो भवति मकारादौ वकारादौ प्रत्यये च परतः. अर्थात् मकारादि तथा वकारादि प्रत्यय परे रहते संयोग पूर्व में नहीं है जिसके ऐसे उकारान्त प्रत्यय का लोप होता है। सु+वस् = सु+नु+वस्=सु+न्+वस्=सुन्वः, सुनुवः सुनु+मः सुन्मः सुनुमः।

३४५ **ल्युट् च** ३।३।११५ धातोः ५।१ नपुंसके भावे ७।१ ल्युट् १।१ भवति। नपुंसके लिङ्गे भावे ल्युट् प्रत्ययो भवति। अर्थात् नपुंसक लिङ्ग में भाव में ल्युट् प्रत्यय होता है। हस्+ल्युट्=अन=हसनम्।

## व

३४६ **वचिस्वपियजादीनां किति**—६।१।१५ किति ७।१ वचिस्वपियजादीनां धातूनां ६।३ सम्प्रसारणम् १।१ भवति। किति परतः वचिस्वप्योर्यजादीनां च सम्प्रसारणं भवति। अर्थात् कित् प्रत्यय परे रहते वच् स्वप् यजादि धातुओं को सम्प्रसारण होता है। यथा—वच्+क्त=त=व को उ सम्प्रसारण =उच्=त = कुत्व=उक्तः।

३४७ **वर्तमाने लट्** ३।२।१२३ धातोः ५।१ वर्तमाने काले ७।१ लट् लकारः १।१ स्यात्। धातोः वर्तमाने काले लट् स्यात्। अर्थात् धातु से वर्तमान काल में लट् लकार होता है। यह सूत्र प्रत्यय बनाता है।

३४८ **वसुस्रंसुध्वंस्वनडुहां दः**—८।२।७२ वसु-स्रंसु-ध्वंसु+अनडुहां ६।३ पदानां ६।३ दः १।१ भवति। सकारान्तस्य वस्वन्तस्य पदस्य स्रंसु ध्वंसु अनडुह् एतेषां च दकारादेशो भवति। अर्थात् सकारान्त वस्वन्त पद को स्रंसु तथा अनडुह् पद को दकार आदेश होता है। अनडुह्+भ्याम् =ह् को द्=अनडुद्भ्याम्।

३४९ **वसोः सम्प्रसारणम्**—६।४।१३१ भस्य—६।१ अङ्गस्य ६।१ वसोः ६।१ सम्प्रसारणम् १।१ भवति। वस्वन्तस्य अङ्गस्य भस्य सम्प्रसारणं भवति। अर्थात् वसु अन्त वाले भ संज्ञक अङ्ग को सम्प्रसारण होता है। यथा—विद्+शतृ —विद्+वस्+शस् व को उ=सम्प्रसारण - स को ष=विसर्ग=विदुषः।

३५० **वावसाने**—८।४।५६ अवसाने ७।१ झलाम् ६।३ चर् १।१ भवति।

अवसाने झलाम् चरः स्यु विकल्पेन । अर्थात् **अवसान में [पद के अन्त्य वर्ण को अवसान कहते हैं]** झलों को चर् आदेश होता है। विकल्प से यथा—रामाद् के द् को त् =रामात्, रामाद् ।

३५१ **वा पदान्तस्य**—८।४।५९ यथि ७।१ पदान्तस्य ६।१ वा [अ०] परसवर्णः १।१ भवति । ययि परतः पदान्तस्य अनुस्वारस्य विकल्पेन परसवर्णादेशो भवति । अर्थात् यय् प्रत्याहार परे रहते पदान्त अनुस्वार को विकल्प से परसवर्ण होता है । यथा—सम्+यन्ता=संयन्ता, सम्यन्ता । सम्+कल्पः=संकल्पः सङ्कल्पः ।

३५२ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्** —३।३।१६१ विधि······प्रार्थनेषु ७।३ अर्थेषु ७।३ लिङ् लकारः १।१ स्यात् । अर्थात् विधि, निमन्त्रण, आमन्त्रण, संप्रश्न प्रार्थना आदि अर्थों में लिङ् लकार होता है यह सूत्र भी प्रत्यय बनाता है ।

३५३ **विप्रतिषेधे परं कार्यम्**—१।४।२ प्रतिषेधे [तुल्यबलविरोधे] ७।१ परम् १।१ कार्यम् १।१ भवति । तुल्यबलविरोधे परं कार्यं भवति । तुल्यबल विरोध में पर कार्य होता है । (यह तो सपादसप्ताध्यायी तक ही फासिला करता है) यथा वृक्ष+भ्यस्=यहाँ पर सुपि च और बहुवचने झल्येत् दोनों ही प्राप्त हैं । सुपि च ७।३।१०२ है और बहुवचने झल्येत् ७।३।१०३ है । इसलिए बहुवचने झल्येत् लगा ।

३५४ **विभक्तिश्च**—१।४।१०४ तिङः ६।१ सुपः १।३ विभक्तिः १।१ भवति । [संज्ञा] सुप्तिङौ विभक्तिसंज्ञौ स्तः । अर्थात् सुप् और तिङ् की विभक्ति संज्ञा होती है ।

३५५ **विंशत्यादिभ्यस्तमडन्यतरस्याम्**—५।२।५६ विंशत्यादिभ्यः ५।३ प्रातिपदिकेभ्यः ५।३ अन्यतरस्याम् [अ०] डटः ६।१ तमट् १।१ [आगमः] स्यात् । संख्यावाचिभ्यः विंशति आदिभ्यः प्रातिपदिकेभ्यः डटः तमडागमो भवति । अर्थात् संख्यावाची विंशति आदि प्रातिपदिकों से परे डट् को तमट् का आगम होता है । यथा विंशतेः पूरणः=विंशति+डट्=विंशति+तमट्+डट्=विंशतितमः ।

३५६ **विशेषणं विशेष्येण बहुलम्**—२।१।५७ विशेषणं १।१ सुबन्तं १।१ विशेष्येण ३।१ सुबन्तेन ३।१ बहुलम् समासः १।१ भवति स च कर्मधारयः । विशेषणवाचि सुबन्तं विशेष्यवाचिना सुबन्तेन बहुलं समस्यते । अर्थात् विशेषणवाची सुबन्त का विशेष्यवाची सुबन्त के साथ समास होता है और वह कर्मधारय होता

है। यथा नीलञ्च तदुत्पलं—यहां नीलं विशेषण वाची सुबन्त है, उत्पल विशेषण वाची सुबन्त है। समास, प्रातिपदिक संज्ञा = सुलोप नीलोत्पलम्।

३५७ **विसर्जनीयस्य सः**—८।३।३४ खरि ७।१ विसर्जनीयस्य ६।१ सः १।१ भवति। खरि परतः विसर्जनीयस्य सः भवति। अर्थात् खर् प्रत्यय परे रहते विसर्ग को स होता है। विष्णुः + त्राता = विष्णुस्त्राता।

३५८ **वृद्धाच्छः**—४।२।११४ वृद्धात् ५।१ प्रातिपदिकात् ५।१ शेषेऽर्थे ७।१ छः १।१ प्रत्ययः १।१ शेषेऽर्थे वृद्धसंज्ञकात् छ प्रत्ययो भवति। अर्थात् वृद्ध संज्ञक से छ प्रत्यय होता है। माला—वृद्ध संज्ञा = माला + छ = ईय भ संज्ञक आलोप = मालीयः।

३५९ **वृद्धिरादैच्**—१।१।१ आत् १।१ ऐच् १।१ [प्रत्याहारः] वृद्धिः [संज्ञः] भवति। आदैच् वृद्धिसंज्ञः स्यात्। आ, ऐ, औ [आर् आल्] की वृद्धि संज्ञा होती है।

३६० (वा०) **वृद्ध्योत्वतृजवद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन**—वृद्ध्योत्वादिषु प्राप्तेषु विप्रतिषेधे अपरम् पूर्वम् कार्यम् १।१ भवति इति अर्थे कृते पूर्वमेव नुम् कार्यं भवति। अर्थात् वृद्धि, ओत्व तृज्वद् भात्र गुण की अपेक्षा नुम् विधि बलवती होती है। यथा—वारि + ए = यहां गुण प्राप्त है इस वार्तिक से निषेध कर नुम् हुआ।— वारिणे।

३६१ **वृद्धिर्यस्याचामादिस्तद्वृद्धम्**—१।१।७३ शब्दस्य यस्य ६।१ अचां ६।३ [मध्ये] आदिः १।१ [अच्] वृद्धिः १।१ तद् १।१ वृद्धं १।१ [संज्ञा] स्यात्। यस्य समुदायस्य अचाम् आदिः अच् वृद्धि-संज्ञकः स्यात्। अर्थात् जिस समुदाय के अचों में आदि अच् वृद्धिसंज्ञक हो उस समुदाय की वृद्धि संज्ञा हो जाती है। यथा— शाला—वृद्ध संज्ञा = छ = ईय आ लोप शालीय = प्रातिपदिक कार्य तत् कार्य।

३६२ **वृद्धिरेचि**—६।१।८८ आत् ५।१ एचि ७।१ संहितायां ७।१ पूर्वपरयोः ६।२ एको १।१ वृद्धिः १।१ आदेशः स्यात्। अवर्णात् एचि परे वृद्धिरेकादेशः स्यात्। अर्थात् अवर्ण से एच् परे रहते पूर्व पर के स्थान में वृद्धिरूप एकादेश होता है। कृष्ण + एकत्वं = कृष्णैकत्वम्।

३६३ **वृद्धो यूना तल्लक्षणश्चेदेव विशेषः**—१।२।६५ वृद्धः १।१ यूना ३।१ एकशेषः तल्लक्षणश्चेदेव विशेषः १।१। वृद्धशब्देन अत्र गोत्रमुच्यते। लक्षणं निमित्तम्। विशेषः (विशेष्यं) गोत्रप्रत्ययान्तशब्दः युवप्रत्ययान्तेन सह शिष्यते युवा निवर्तते वृद्धयुवनिमित्तकमेव चेत् विशेषो भवेत्। अर्थात् गोत्र प्रत्ययान्त शब्द युवा प्रत्ययान्त

शब्द के साथ शेष रह जाता है यदि वृद्ध युवा निमित्तक प्रत्यय का ही भेद हो तो यथा— गार्ग्यश्च गार्ग्यायणश्च इति गार्ग्यौ ।

३६४ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः—८।२।३६ झलि ७।१ पदान्ते ७।१ व्रश्च··· छशां ६।३ षः १।१ झलि परतः व्रश्च् भ्रस्ज् सृज् मृज् यज् राज् भ्राज् एषां छकारान्तानां शकारान्तानां च ष आदेशो भवति । अर्थात् झल् परे रहते ओव्रश्चू भ्रस्जो सृज् मृजूष् यज् राजृ टुभ्राजृ इन धातुओं को तथा छकारान्त और शकारान्त धातुओं को ष आदेश होता है । यथा—राजृ+क्विप्=सर्वापहारी लोप ज् को ष्=ड्=ट्=राट् ।

## श

३६५ शरीरावयवाद्यत्—५।१।६ तस्मैहितम् इत्यर्थे शरीरावयवात् ५।१ प्रातिपदिकात् ५।१ यत् १।१ प्रत्ययः तद्धितः १।१ भवति । शरीरावयववाचिनः प्रातिपदिकात् हितम् इत्यस्मिन्नर्थे यत् प्रत्ययो भवति । अर्थात् शरीर के अवयववाची प्रातिपदिक से हित अर्थ में यत् प्रत्यय होता है । यथा—दन्तेभ्यो हितम्=दन्त+यत्=भ संज्ञा अकार लोप दन्त्य प्रातिपदिक=सु=अम् दन्त्यम् ।

३६६ शश्छोऽटि—८।४।६३ झयः ५।१ अटि ७।१ शः ६।१ छः १।१ भवति । झयः परस्यः शकारस्य छकारादेशो भवति अटि परतः । अर्थात् झय्प्रत्याहार से परे शकार को छकार आदेश होता है अट् परे रहते । वाक्+शेते=श को छ=वाक्छेते ।

३६७ शि सर्वनामस्थानम्—१।१।४२ शि १।१ सर्वनामस्थानम् १।१ [संज्ञा] भवति । [जस् शसोः शि] जस् शसोः स्थाने जायमानस्य शीत्यस्य सर्वनामस्थानसंज्ञा भवति । अर्थात् जस् शस् के स्थान में जो शि आदेश होता है उसकी सर्वनाम स्थान संज्ञा होती है । यथा — ज्ञान+जस्=शि=सर्वनामस्थानसंज्ञा = नुम्= उपधादीर्घ=ज्ञानानि ।

३६८ शे मुचादीनाम्* ७।१।५६ शे ७।१ मुचादीनां ६।३ धातूनां ६।३ नुम् १।१ भवति । शे प्रत्यये परतो मुचादीनाम् अङ्गानां नुमागमो भवति अर्थात् श प्रत्यय परे रहते मुचादि धातुओं को नुम् का आगम होता है । यथा—मुच्+ति श विकरण =अ मुच्+नुम्+ति=मुञ्चति ।

---

टिप्पणी— *मुञ्चतिलुम्पतिश्चैव विदिर्लिम्पति लुप्सिची । कृतिः खिदिः पिसिश्चैव विशिश्चाष्टौ मुचादयः ।।

३६९ **शेषात् कर्तरि परस्मैपदम्**—१।३।७८ उक्तेभ्यः आत्मनेपदेभ्यः ५।३ शेषात् ५।१ धातोः ५।१ कर्तरि ७।१ परस्मैपदम् १।१ भवति। आत्मनेपदभिन्नात् धातोः कर्तरि वाच्ये परस्मैपदं भवति। अर्थात् जिन धातुओं से आत्मनेपद का विधान नहीं किया गया है उनसे परस्मैपद होता है। यथा—या+तिप् (परस्मैपद)=शप् =अ लुक्=याति।

३७० **शेषो घ्यसखि**—१।४।७ [ह्रस्वम्[ इदुदन्तं नदीं विहाय] शेषः १।१ घि १।१ असखि १।१ सखि विहाय ह्रस्वम् इकारान्तम् उकारान्तम् शब्दरूपम् सखिशब्दं वर्जयित्वा तस्य घिसंज्ञा भवति। अर्थात् जो ह्रस्व इकारान्त उकारान्त शब्द स्त्रीलिङ्ग के वाचक नहीं हैं तथा जो स्त्रीवाचक होते हुए भी नदी संज्ञक नहीं हैं उनकी घिसंज्ञा होती है। यथा—अग्नि+ए+घि संज्ञा=गुण+अयादेश= अग्नये।

३७१ **शेषो बहुव्रीहिः**— २।२।२३ तत्पुरुषात् अव्ययीभावाच्च ५।१ शेषः १।१ बहुव्रीहि १।१ समासः १।१ ।उक्तादन्यः समासो बहुव्रीहिसंज्ञको भवति। अर्थात् इससे पूर्व जो समास कह दिया गया है उससे अन्य की बहुव्रीहि संज्ञा होती है। यथा— प्राप्तोदको ग्रामः।

३७२ **श्नसोरल्लोपः**—६।४।१११ सार्वधातुके क्ङिति ७।१ श्नसोः ६।२ अल्लोपः १।१। सार्वधातुके क्ङिति परतः श्नस्य अस्तेश्चाकारस्य लोपो भवति। अर्थात् कित् ङित् सार्वधातुक परे रहते श्नम् प्रत्यय तथा अस् धातु के अकार का लोप होता है।

३७३ **श्नाभ्यस्तयोरातः**—६।४।११२ सार्वधातुके क्ङिति ७।१ श्नाभ्यस्तयोः ६।२ आतः ६।१ लोपः १।१ भवति। सार्वधातुके क्ङिति परतः श्ना इत्येतस्य अभ्यस्तानाञ्च अङ्गानाम् आकारस्य लोपो भवति। अर्थात् कित् ङित् सार्वधातुक परे रहते श्ना तथा अभ्यस्त संज्ञक अकार का लोप होता है। यथा—मा+झ=अते= द्वित्व=अभ्यास को इत्व=मि+मा अते आ लोप=मिमते।

३७४ **श्लौ**—६।१।१० श्लौ ७।१ प्रथमस्य ६।१ एकाचः ६।१ अजादेः ६।१ द्वितीयस्य ६।१ द्वे १।२ भवतः। श्लौ परतः धातोरेकाचः प्रथमस्य अजादेर्द्वितीयस्य च द्वे भवतः। अर्थात् श्लु परे रहते हलादि धातु के प्रथम एकाच् को एवं अजादि धातु के द्वितीय एकाच् को द्वित्व होता है। यथा—हु+ति=श्लु=द्वित्व=चुत्व= गुण जुहोति।

**टिप्पणी**—श्नम् च अस् च श्नसौ तयोः। अतः लोपः अल्लोपः

इति समासः।

यथा—रुध+तस्=श्नम्=अ लोप=त को ध, स को रु विसर्ग=रुन्धः।

## ष

३७५ **षः प्रत्ययस्य** १।३।६ उपदेशे ७।१ प्रत्ययस्य ६।१ आदिः १।१ षः १।१ इत् १।१ भवति। उपदेशे प्रत्ययस्य आदिः षकार इत्संज्ञको भवति। अर्थात् उपदेश अवस्था में प्रत्यय के आदि ष की इत् संज्ञा होती है। यथा—गार्ग्य+ष्फ =ष की इत् संज्ञा=आयन्=गार्ग्यायिण+ङीप् गार्ग्यायिणी।

३७६ **षट्कति कतिपयचतुरां थुक्** ५।२।५१ षट्...चतुरां ६।३ थुक् १।१ डटि ७।१ षट्कतिकतिपय ६।१ चतुरां थुक् ६।१ आगमः १।१ स्यात्। षट्कतिकतिपय, चतुर् एतेषां डटि परतः थुक् आगमो भवति। अर्थात् षट् कति कतिपय, चतुर् इनसे डट् प्रत्यय परे रहते थुक् का आगम होता है। यथा—षष्+डट् (अ) षष्+थुक्+ अ=ष्टुत्व=षष्ठः।

३७७ **ष्टुना ष्टुः** ८।४।४१ ष्टुना ३।१ योगे ७।१ स्तोः ६। ष्टुः १।१ स्यात्। षकारटवर्गाभ्यां योगे सकारतवर्गयोः षकारटवर्गौ स्तः। अर्थात् षकार और तवर्ग के योग में सकार तवर्ग होता है। यथा—रामस्+षष्ठः=रामष्षष्ठः।

३७८ **षड्भ्यो लुक्** ७।१।२२ षड्भ्यः ५।३ जश्शसोः ६।२ लुक् १।१ भवति। षट् संज्ञकात् परस्य जस् शसोर्लुक् स्यात् अर्थात् षट् संज्ञक से परे जस् और शस् का लुक् होना है। कति+जस्=लुक्=कति।

३७९ **ष्णान्ता षट्** १।१।२४ षकारान्ता नकारान्ता च या संख्या सा षट् संज्ञिका भवति। अर्थात् सकारान्त और नकारान्त जो संख्यावाचक शब्द है वह षट् संज्ञक होता है यथा षट् तिष्ठन्ति, नकारान्त—पञ्च।

३८० **षष्ठी शेषे** २।३।५० कर्मादिभिः ३।३ शेषे ७।१ अर्थे ७।१ षष्ठी विभक्तिः १।१ स्यात्। शेषे षष्ठी विभक्तिर्भवति। अर्थात् कर्मादि कारक जहाँ विव-क्षित न हों वहाँ षष्ठी विभक्ति होती है। यथा—राज्ञः पुरुषः। यहाँ राजन् शब्द से षष्ठी एकवचन ङस् विभक्ति करके राज्ञः बना।

## स

३८१ **संख्यापूर्वो द्विगुः** २।१।५२ संख्या पूर्वः १।१ समासः १।१ द्विगुः १।१ भवति। संख्यापूर्वको यः समासः सः द्विगुसंज्ञको भवति। अर्थात् संख्यावाची पूर्व में है जिसके ऐसे समास की द्विगु संज्ञा होती है। यथा—पञ्च इन्द्राण्यो देवता अस्य।

३८२ **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** ५।४।१७ संख्यायाः ५।१ प्रातिपदिकात् ५।१ क्रियाभ्यावृत्तिगणने कृत्वसुच्—वृत्तिगणने ७।१ अर्थे ७।१

कृत्वसुच् प्रत्ययः १।१ भवति। क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः संख्यावाचिभ्यः शब्देभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति। यथा—पञ्च वारान् भुङ्क्ते।—पञ्चन्+कृत्व-सुच् न लोप=उच् लोप स रु विसर्ग=पञ्चकृत्वः।

३८३ **संयोगान्तस्य लोपः** ८।२।२३ संयोगान्तस्य ६।१ पदस्य ६।१ लोपः १।१ स्यात्। संयोगान्तस्य पदस्य लोपो भवति। संयोग अन्त वाले पद का लोप होता है। यथा—गोमत्+सु =गोमत्+दीर्घ नुम्+गोमान्त+सु=सु लोप—त् लोप =गोमान्।

३८४ **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ३।१।२५ सत्यापचुरादिभ्यः धातुभ्यः ५।३ णिच् प्रत्ययः १।१ स्यात्। सत्याप पाश रूप वीणा तूल श्लोक सेना लोम त्वच् वर्म वर्ण चूर्ण एभ्यः अथ च चुरादिभ्यो धातुभ्यो णिच् प्रत्ययो भवति। अर्थात् उक्त शब्दों से एवं चुरादिगण पठित धातुओं से णिच् प्रत्यय होता है। यथा —सत्यम् आचष्टे—सत्याप+णिच् =सत्याप+इ =धातु संज्ञा =तिप् =सत्यापि+शप् (अ)=गुण सत्यापयति।

३८५ **सन्यङोः** ६।१।६ सन् यङोः ६।२ अनभ्यासस्य ६।१ एकाचः ६।१ द्वे १।२ स्तः। सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचोऽजादेर्द्वितीयस्य वा द्वे भवतः। अर्थात् सन्नन्त और यङन्त धातु के अनभ्यास अवयव प्रथम एकाच् तथा अजादि के द्वितीय एकाच् को द्वित्व होता है। यथा—पच्+सन् =द्वित्व पच पच्+स =अभ्यास संज्ञा च लोप इत्व=कुत्व=क ष संयोग क्ष, धातुसंज्ञा= लट्=तिप् = शप् विकरण= अ = पिपक्षति।

३८६ **सन्यतः** ७।४।७९ सनि ७।१ अतः ६।१ अभ्यासस्य ६।१ इत् १।१ भवति। सनि परतः अकारान्तस्य अभ्यासस्य इकारादेशो भवति। सन् परे रहते अकारान्त अभ्यास को इत्व होगा यथा—पिपक्षति।

३८७ **सनाद्यन्ता धातवः** ३।१ ३२ सनाद्यन्ताः १।३ धातवः स्यु १।३ सनाद्यन्ता धातुसंज्ञका भवन्ति। अर्थात् सनाद्यन्तों की धातु संज्ञा होती है। सनादि— सन् क्यच् काम्यच् क्यङ् क्यष् क्विप्, यङ् इयाय आय् णिङ् णिच इयङ् इत्यादि। यथा—कृ+सन्=कृ+इट्+सन्=किर्+स द्वित्व=अभ्यास संज्ञा = चुत्व= दीर्घ=चिकीर्ष=धातु संज्ञा =लट् =तिप्=शप्=चिकीर्षति।

३८८ **सप्तम्यास्त्रल्** ५।३।१० किं सर्वनाम बहुभ्यः ५।३ अस्मदादिभ्यः ५।३ प्रातिपदिकेभ्यः ५।३ त्रल् प्रत्ययः १।१ स्यात्। सप्तम्यन्तात् प्रातिपदिकात् त्रल् प्रत्ययो भवति। अर्थात् सप्तम्यन्त प्रातिपदिक अस्मद् आदि शब्दों से त्रल् प्रत्यय होता

३८९ **सप्तम्यधिकरणे च** २।३।३६ अनभिहिते ७।१ अधिकरणे ७।१

सप्तमी १।१ विभक्तिः १।१ भवति । अनभिहिते अधिकरणे सप्तमी विभक्तिर्भवति चकारात् दूरान्तिकार्थेभ्यश्च । अर्थात् अनुक्त अधिकरण में सप्तमी विभक्ति होती है । च पढ़ने से दूरान्तिक आदि शब्दों से भी सप्तमी होती है । यथा—कटे आस्ते दूरेऽस्ति । यहाँ कट से सप्तमी विभक्ति हुई ।

३६० **सभाया यः** ४।४।१०५ सभायाः ५।१ प्रातिपदिकात् ५।१ यः १।१ प्रत्ययः १।१ स्यात् तत्र "साधु" इत्यर्थे । प्रातिपदिकात् सभाशब्दात् तत्र साध्वर्थे यः प्रत्ययो भवति । अर्थात् प्रातिपदिक सभा शब्द से साधु अर्थ में य प्रत्यय होता है । सभा+य=भ संज्ञा, आ लोप=सभ्यः ।

३६१ **समानकर्तृकयोः पूर्वकाले**—४।४।२१ धात्वोः ६।२ समानकर्तृकयोः ६।२ पूर्वकाले ७।१ क्त्वा १।१ प्रत्ययः १।१ भवति । समानकर्तृकयोः धात्वर्थयोः पूर्वकाले धात्वर्थे वर्तमानात् धातोः क्त्वा प्रत्ययो भवति । अर्थात् एक कर्ता है जिन दो क्रियाओं का उनमें जो पूर्व काल में वर्तमान धातु है उससे क्त्वा प्रत्यय होता है । यथा—देवदत्तः पीत्वा व्रजति=यहाँ पा व व्रज् धातु का कर्ता एक देवदत्त है अतः पूर्वकालिक होने के नाते पा धातु से क्त्वा प्रत्यय होता है ।

३६२ **समासेऽनञ् पूर्वे क्त्वो ल्यप्** ७।१।३७ अनञ् पूर्वे ७।१ समासे ७।१ क्त्वः ६।१ ल्यप् १।१ भवति । अनञ् पूर्वे समासे क्त्वा इत्यस्य स्थाने ल्यप् आदेशो भवति । अर्थात् नञ् भिन्न पूर्व में है जिसके ऐसे समास में क्त्वा को ल्यप् आदेश होता है । प्रकृ+क्त्वा=ल्यप्=तुक् प्रकृत्य ।

३६३ **समाहारः स्वरितः** १।२।३१ उदात्तानुदात्त समाहारः अच् १।१ स्वरितः १।१ भवति । उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरित संज्ञः स्यात् । अर्थात् उदात्तत्व अनुदात्तत्व ये दोनों वर्ण धर्म जहाँ एक जगह मिल जाएँ उसकी स्वरित संज्ञा होती है ।

३६४ **सम्प्रसारणाच्च**—६।१।१०८ सम्प्रसारणात् ५।१ अचि ७।१ पूर्वपरयोः ६।२ एकं पूर्वरूपम् १।१ भवति । सम्प्रसारणात् अचि परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति । अर्थात् सम्प्रसारण संज्ञक वर्ण से अच् परे रहते पूर्व पर के स्थान में पूर्वरूप एकादेश होता है । यथा—यज्+त=[इ सम्प्रसारण] इ+अज्+त=इष्+त=ष्टुत्व इष्टम् ।

३६५ **सम्बुद्धौ च**—७।३।१०६ सम्बुद्धौ ७।१ च [अ०] आपः ६।१ अङ्गस्य ६।१ एत् १।१ सम्बुद्धौ च परतः आबन्तस्य अङ्गस्य एकारादेशो भवति । अर्थात् सम्बुद्धि परे रहते आबन्त अङ्ग को एकारादेश होता है । हे खट्वा+सु=ए=सु लोप=हे खट्वे ।

३९६ **सम्बोधने च** २।३।४७ सम्बोधने ७।१ प्रथमा विभक्तिः १।१ भवति। सम्बोधने च प्रथमा विभक्तिर्भवति अर्थात् सम्बोधन में प्रथमा विभक्ति होती है। यथा—हे देवदत्त+सु=सु लोप=हे देवदत्त।

३९७ **समर्थानां प्रथमाद् वा** ४।१।८२ अधिकारोऽयं प्राग्दिशो विभक्तिः ५।३।१ इति यावत् ततः समर्थानां मध्ये प्रथमोच्चरितात् प्रत्ययः वा भवति। इतोऽग्रे वक्ष्यमाणाः तद्धिताः प्रत्ययाः समर्थानां मध्ये य प्रथमोच्चरितः प्रकृतिस्तस्मात् विकल्पेन भवति। अर्थात् यहाँ से लेकर प्राग्दिशो विभक्तिः तक कहे जाने वाले प्रत्यय समर्थों में प्रथम प्रकृति उससे विकल्प से होते हैं। यहाँ उपगोः अपत्यम्=यहाँ अपत्य भी समर्थ प्रकृति है किन्तु प्रकृति उपगु होने से उसी से अण् हुआ।=आदिवृद्धि=गुण अवादेश=औपगवः।

३९८ **सरूपाणामेकशेष एकविभक्तौ** १।२।६४ एकविभक्तौ ७।१ सरूपाणाम् ६।१ एकशेषः १।१ भवति। सरूपाणाम् शब्दानाम् एकविभक्तौ परतः एकशेषो भवति। अर्थात् एक विभक्ति परे रहते समान रूप वाले शब्दों में एक ही शब्द शेष रह जाता है।

४९९ **सहयुक्तेऽप्रधाने** २।३।१९ सहयुक्ते ७।१ अप्रधाने ७।१ अर्थे ७।१ तृतीया विभक्तिः १।१ भवति। सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिर्भवति। अर्थात् सह के अर्थवाची शब्दों के योग में तृतीया विभक्ति होती है। यथा पुत्रेण सह आगतः—यहाँ पर सह के योग में अप्रधान होने से पुत्र शब्द से तृतीया विभक्ति हो गई।

४०० **स्तोः श्चुना श्चुः** ८।४।४० श्चुना ३।१ योगे ७।१ स्तोः ६।१ श्चुः १।१ स्यात्। शकारचवर्गाभ्यां योगे सकारतवर्गयोः शकारचवर्गौ स्तः। अर्थात् शकार चवर्ग के योग में सकार तवर्ग को शकार चवर्ग होता है। यथा—रामस्+शेते=स् को श्=रामश्शेते।

४०१ **स्थानेऽन्तरतमः** १।१।५० स्थाने ७।१ अन्तरतमः आदेशः १।१ भवति। प्रसंगे सति सदृशतम आदेशो भवति अर्थात् [एक के स्थान में जहाँ अनेकों आदेश प्राप्त होते हैं उसे प्रसंग कहते हैं।] प्रसंग होने पर स्थानी के अत्यन्त समान आदेश होता है। यथा—सुधी+उपास्यः=यहाँ [इको यणचि] द्वारा इ को यण् का विधान किया गया है। इ के स्थान में य, व, र, ल, चार आदेश प्राप्त हुए हैं। ऐसी दशा में उक्त सूत्र ने इ के अति समान [स्थान प्रयत्न से जान कर] य कर दिया।=सुध्युपास्यः।

४०२ **स्पृशोऽनुदके क्विन्** ३।२।५८ अनुदके सुपि ७।१ [उपपदे] स्पृशः ५।१ धातोः ५।१ क्विन् १।१ प्रत्ययः १।१ स्यात्। अनुदके सुबन्त उपपदे स्पृशधातोः क्विन्

प्रत्ययो भवति । अर्थात् उदक भिन्न सुबन्त उपपद हो तो स्पृश् धातु से क्विन् प्रत्यय होता है । यथा—मन्त्रेण स्पृशति=मंत्र बोल कर स्पर्श करता है ।

४०३ **स्यतासी लृलुटोः** ३।१।३३ लृलुटोः ६।२ स्यतासी १।२ भवतः । लृङ् लृटोः लुटः परतो धातोः स्यतासी प्रत्ययौ भवतः । अर्थात् लृङ् लृट् तथा लुट् परे रहते धातु से स्य तास् प्रत्यय होते हैं । यह भी प्रत्यय बनाता है । तिङ् में स्य लगाकर लृट् लकार के स्यति स्यतः आदि प्रत्यय बनते हैं ।

४०४ **सर्वनाम्नः स्मै** ७।१।१४ सर्वनाम्नः ५।१ अङ्गात् ५।१ ङे ६।१ स्मै १।१ स्यात् । सर्वनाम्नः परस्य ङे स्मै भवति । अर्थात् सर्वनाम संज्ञक से परे ङे को स्मै आदेश होता है । सर्व+ङे=सर्वनाम संज्ञा=सर्वस्मै ।

४०५ **सर्वनाम्नः स्याड् ढ्रस्वश्च** ७।३।११४ आबन्तात् ५।१ सर्वनाम्नः ५।१ ङितः ६।१ स्याड् [आगमः] १।१ आपश्च ६।१ ह्रस्वः १।१ स्यात् । सर्वनाम्नः आबन्तात् अङ्गात् परस्य ङितः प्रत्ययस्य स्याडागमः सर्वनाम्नो ह्रस्वश्च भवति । अर्थात् आबन्त सर्वनाम अङ्ग से परे ङित् प्रत्यय को स्याट् का आगम होता है तथा आबन्त सर्वनाम को ह्रस्व होता है । सर्वा+ङे=सर्वा+स्याट् ङे = सर्वस्मै= ह्रस्व=सर्वस्मै ।

४०६ **सर्वनामस्थाने चाऽसम्बुद्धौ** ६।४।८ असम्बुद्धौ सर्वनामस्थाने ७।१ नोपधायाः ६।१ दीर्घः १।१ भवति । सम्बुद्धिभिन्ने सर्वनामस्थाने परतः नान्तस्य अङ्गस्य उपधायाः दीर्घो भवति । अर्थात् सम्बुद्धिभिन्न सर्वनाम स्थान परे रहते नान्त अङ्ग की उपधा को दीर्घ होता है । यथा—राजन्+सु=दीर्घ=सु लोप=राजा ।

४०७ **स्वतन्त्रः कर्ता** १।४।५४ क्रियासिद्धौ ७।१ स्वतन्त्रः १।१ कर्ता १।१ भवति । क्रियायाः सिद्धौ स्वतन्त्रं यत् कारकं तत् कर्तृसंज्ञकं भवति । अर्थात् क्रिया की सिद्धि में जो स्वतन्त्र कारक है उसकी कर्ता संज्ञा होती है । यथा देवदत्तः पचति । यहाँ पाक क्रिया की सिद्धि में देवदत्त स्वतन्त्र है अतः उसकी कर्तृ संज्ञा हुई ।

४०८ **स्वपो नन्** ३।३।९१ स्वपः धातोः ५।१ भावे अर्थे ७।१ नन् १।१ प्रत्ययः १।१ भवति । स्वप् धातोर्भावे नन् प्रत्ययो भवति । अर्थात् स्वप् धातु से भाव अर्थ में नन् प्रत्यय होता है । स्वप्+नन्=न प्रातिपदिक संज्ञा=सु=रुत्व विसर्ग= स्वप्नः ।

४०९ **स्वमोर्नपुंसकात्** ७।१।२३ नपुंसकात् ५।१ अङ्गात् ५।१ स्वमोः ६।२ लुक् स्यात् । नपुंसकलिङ्गात् परस्य सु, अम् अनयोर्लुक् स्यात् । अर्थात् नपुंसक लिङ्ग वाले अङ्ग से परे सु तथा अम् का लुक् होता है । दधि+सु=लुक् दधि ।

४१० **स्वरादिनिपातमव्ययम्** १।१।३७ स्वरादि निपातम् १।१ अव्ययम्

१।१ स्वरादि शब्द रूपाणि निपाताश्च अव्ययसंज्ञकानि सन्ति । अर्थात् स्वरादि गण पठित शब्दों की तथा निपातों की अव्यय संज्ञा होती है । यथा स्वर्, प्रातर, च, वा इत्यादि ।

*४११ **स्वरितञितः कर्त्रभिप्राये क्रियाफले** १।३।७२ स्वरितञितः धातोः ५।१ कर्त्रभिप्राये क्रियाफले ७।१ आत्मनेपदं १।१ स्यात् । स्वरितेतो ञितश्च धातोरात्मनेपद स्यात् कर्तृगमिनि क्रियाफले । अर्थात् स्वरितेत् धातु तथा ञित् धातु से आत्मनेपद होता है यदि क्रिया का फल कर्ता को मिल रहा हो तो । यथा—पच्+ ते=पच् +शप्+ते=पच्+अ+ते=पचते ।

४१२ **स्वादिभ्यः श्नुः** ३।१।७३ स्वादिभ्यः ५।३ धातुभ्यः ५।३ श्नुप्रत्ययः १।१ स्यात् । स्वादिभ्यो धातुभ्यः श्नु प्रत्ययो भवति । अर्थात् स्वादिगणपठित धातुओं से श्नु प्रत्यय होता है । यथा—सु+तिप्=सु+श्नु+तिप्=षु+नु+ति =सुनु+ति=गुण=सुनोति ।

३१३ **ससजुषो रुः** ८।२।६६ पदान्तयोः ६।२ ससजुषोः ६।२ रुः १।१ स्यात् । सकारान्तस्य पदस्य सजुषस्य रुः भवति अर्थात् सकारान्त पद को तथा सजुष् के ष को रु होता है । यथा—राम+सु=स्=रु=र्=रामः ।

४१४ **साधकतमं करणम्** १।४।४२ कारके ७।१ [क्रियायां] साधकतमं १।१ करणं १।१ कारकं १।१ स्यात् क्रियायाः सिद्धौ यत् साधकतमं तत् कारकं करण-संज्ञकं भवति । अर्थात् क्रिया की सिद्धि में सबसे अधिक सहायक कारक की करण संज्ञा होती है । यथा—परशुना छिनत्ति यहाँ छेदन क्रिया में अत्यन्त सहायक परशु है । अतः उसकी करण संज्ञा हुई । तब तृतीया विभक्ति ।

४१५ **सान्तमहतः संयोगस्य** ६।४।१० असम्बुद्धौ सर्वनामस्थाने ७।१ सान्तमहतः ६।१संयोगस्य ६।१ नोपधायाः ६।१ दीर्घः १।१ भवति । सकारान्तस्य संयोगस्य सुप् च तिङ्च सुप्तिङौ अन्ते यस्य तत् सुप्तिङन्तं महतश्च यो मकारः तस्य उपधायाः दीर्घो भवति असम्बुद्धौ सर्वनामस्थाने च परतः । अर्थात् सम्बुद्धिभिन्न सर्वनाम स्थान परे रहते सकारान्त संयोग का और महत् शब्द का जो नकार उसकी उपधा को दीर्घ होता है । यथा—श्रेयस्+सु=नुम् श्रेय+न्+स् उपधा दीर्घ सुलोप श्रेयान् ।

४१६ **सार्वधातुकार्धधातुकयोः** ७।३।८४ सार्वधातुकार्धधातुकयोः ७।२ इकः अङ्गस्य ६।१ गुणः १।१ स्यात् । सार्वधातुकार्धधातुकपरयोः इगन्तस्य अङ्गस्य गुणो

---

***टिप्पणी**—१ स्वरितश्च ञ् च स्वरितञौ इतौ यस्य स स्वरितञित् तस्मात् ।

भवति । अर्थात् सार्वधातुक आर्धधातुक प्रत्यय हो तो इगन्त अङ्ग को गुण होता है। यथा—भू+तिप् = शप् विकरण=सार्वधातुक संज्ञा=गुण भो+अ=ति=अवादेश =भवति ।

४१७ **सार्वधातुकमपित्** १।२।४ अपित् १।१ सार्वधातुकम् १।१ ङित् पित् भिन्नं सार्वधातुकं ङित् वत् भवति । पित् भिन्न सार्वधातुक ङित् होता है। यथा—चि+तस्=श्नु=चिनुतस्=ङित्वत् =गुणनिषेध स रु विसर्ग चिनुतः ।

४१८ **सार्वधातुके यक्** ३।१।६७ धातोः ५।१ सार्वधातुके ७ १ भावकर्मणोः ७।२ अर्थयोः ७।२ यक् १।१ भवति । भावकर्मवाचिनि सार्वधातुके परतः धातोर्यक् प्रत्ययो भवति । अर्थात् भावकर्मवाची सार्वधातुक परे रहते धातु से यक् प्रत्यय होता है। यथा—गम्+यक्=गम्य=धातुसंज्ञा=लट्=त=गम्यते ।

४१९ **साऽस्य देवता** ४।२।२४ प्रथमासमर्थात् ५।१ प्रातिपदिकात् ५।१ सा अस्य देवता १।१ इत्यर्थे अणादयः १।३ तद्धिताः प्रत्ययाः १।३ स्युः । सा इति प्रथमा समर्थात् प्रातिपदिकात् अस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमा समर्थदेवता चेत् । अर्थात् प्रथमा समर्थ प्रातिपदिकों से षष्ठ्यर्थ में यथाविहित प्रत्यय होते हैं। यदि वह प्रथमा समर्थ देवता विशेषवाची प्रातिपदिक हो तो। इन्द्रो देवता अस्य=इन्द्र+अण्=आदिवृद्धिः भसंज्ञा=अकार लोप=प्रातिपदिक संज्ञा =सु अम्=ऐन्द्रम् हविः ।

४२० **सिजभ्यस्तविदिभ्यश्च** ३।४।१०९ सिजभ्यस्तविदिभ्यः धातुभ्यः ५।३ ङितः ६।१ झेः ६।१ जुस् १।१ भवति । सिचः परस्य अभ्यस्तसंज्ञकेभ्यः वेत्तेश्च परस्य ङितो झेर्जुस् आदेशो भवति । अर्थात् सिच् से परे अभ्यस्तसंज्ञक से परे विद् धातु से परे झि को जुस् आदेश होता है । कृ+झि=अट्=सिच्=वृद्धि =जुस्= अकार्षुः ।

४२१ **स्त्रियां क्तिन्** ३।३।९४ धातोः ५।१ भावे अर्थे ७।१ स्त्रियां ७।१ क्तिन् १।१ प्रत्ययः १।१ भवति । धातोः स्त्रीलिङ्गे कर्तृभिन्ने कारके संज्ञायां भावे च क्तिन् प्रत्ययो भवति । अर्थात् धातु मात्र से स्त्रीलिङ् में कर्तृभिन्न कारक संज्ञा में क्तिन् प्रत्यय होता है। यथा—कृ+क्तिन्= ति=

४२२ **सुट् तिथोः** ३।४।१०७ लिङः ६।१ तिथोः ६।२ सुट् १।१ भवति । लिङ्सम्बन्धिनोः तकारथकारयोः सुट् आगमो भवति । अर्थात् लिङ् सम्बन्धी जो तकार थकार उनको सुट् का आगम होता है। यथा—भू+यास् ताम्=सुट्=स्कोः संयोगाद्योरन्ते च ८।२ भूयास्ताम् । यह सूत्र प्रत्यय बनाता है।

४२३ **सुप आत्मनः क्यच्** ३।१।८ आत्मनः ६।१ इच्छायां ७।१ सुपः ५।१

कर्मणः ५।१ क्यच् प्रत्ययः परः १।१ स्यात्। आत्मसम्बन्धिनः सुबन्तात् कर्मणः इच्छायाम् अर्थे क्यच् प्रत्ययो वा भवति। अर्थात् आत्मसम्बन्धी सुबन्त कर्म से इच्छा अर्थ में विकल्प से क्यच् प्रत्यय होता है। यथा—आत्मनः पुत्रमिच्छति=पुत्र+क्यच् इत्व=धातुसंज्ञा=लट्=तिप्=पुत्रीयति।

४२४ **सुपो धातुप्रातिपदिकयोः** २।४।७१ धातुप्रातिपदिकयोः ६।२ सुपः ६।१ लुक् १।१ भवति। धात्ववयवस्य प्रातिपदिकावयवस्य च सुपो लुक् भवति। अर्थात् धातु और प्रातिपदिक के अवयव सुप् का लुक् होता है। यथा—पूर्व+अम्+भूत+सु—प्रातिपदिक संज्ञा—अम् लोप भूतपूर्व+सु=भूतपूर्वः।

४२५ **सुप्तिङन्तं पदम्** १।४।१४ सुप् तिङन्तम् १।१ पदम् १।१ भवति। सुबन्तं तिङन्तं च पदसंज्ञं भवति। अर्थात् सुबन्त और तिङन्त की पद संज्ञा होती है। यथा रामः, भवति।

४२६ **सुपि च** ७।३।१०२ सुपि ७।१ यञि ७।१ अतः ६।१ अङ्गस्य ६।१ दीर्घः १।१ भवति। यजादौ सुपि परतः अदन्तस्य अङ्गस्य दीर्घो भवति अर्थात् यजादि सुप् परे रहते अदन्त अङ्ग को दीर्घ होता है। राम+भ्याम्=दीर्घ=रामाभ्याम्।

४२७ **वा० सूत्रेषु अदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र** [अयं नियमः सूत्रार्थकरणे] यदि कोई आवश्यक पद सूत्र में दिखाई न दे तो उसे दूसरे सूत्रों से ले लेना चाहिए। ऐसा सभी सूत्रों के लिये नियम है। यथा—एचोऽयवायावः इस सूत्र में हेतु नहीं दिया गया है अतः उसको जानने की इच्छा हुई तो इको यणचि से अचि को लाये तभी सही अर्थ बनता है कि एचों को क्रम से अय्, अव्, आय्,] आव् आदेश हों, अच् परे रहने पर।

४२८ **सेर्ह्यपिच्च** ३।४।८७ लोटः ६।१ सेः ६।१ हि १।१ अपित् १।१ च [अ०]भवति। लोटः सेः हि स्यात् स च अपित् भवति। अर्थात् लोट् के स्थान में सिप् को हि आदेश होता है और वह अपित् होता है। यथा—भू+सि=हि=शप्=अ=गुण=अवादेश=हि लुक्। =भव।

४२९ **सोदराद्यः** ४।४।१०९ सोदरात् प्रातिपदिकात् ५।१ "तत्र जातः" इत्यर्थे ७।१ यः १।१ प्रत्ययो भवति। प्रातिपदिकात् सोदरशब्दात् तत्रजातः इत्यर्थे यः प्रत्ययो भवति। यथा—सोदर्+य=सोदर्यः।

४३० **सौ च** ६।४।१३ असम्बुद्धौ सौ ७।१ इन्नादीनां ६।३ उपधाया ६।१ दीर्घः १।१ भवति। असम्बुद्धौ सौ परतः इन्नादीनाम् उपधायाः दीर्घः स्यात्। अर्थात्

सम्बुद्धिभिन्न सु परे होते इन् हन् पूषण् अर्यमन् अङ्गों की उपधा को दीर्घ होता है। यथा दण्डिन्+सु=दण्डीन्+सु=सु लोप=न लोप=दण्डी।

## ह

४३१ **हन्तेर्जः** ६।४।३६ हौ ७।१ हन्तेः ६।१ जः १।१ [आदेशः] भवति। हौ परतः हन्तेरङ्गस्य स्थाने ज आदेशो भवति। अर्थात् हि परे रहते हन् अङ्ग के स्थान में ज आदेश होता है। हन्+हि=ज=जहि।

४३२ **ह्रस्वः** ७।४।५९ अङ्गस्य ६।१ अभ्यासस्य ६।१ ह्रस्वः १।१ भवति। अङ्गस्य अभ्यासस्य ह्रस्वो भवति यथा—भू+णल्=वुक्=द्वित्व=अभ्याससंज्ञा =व लोप=ह्रस्व अ जश्=बभूव।

४३३ **ह्रस्वनद्यापो नुट्** ७।१।५४ ह्रस्वनद्यापः ५।१ आतः ६।१ नुट् १।१ [आगमः १।१] स्यात्। ह्रस्वन्तात् नद्यन्तात् आबन्तात् प्रातिपादिकात् परस्य आमः नुडागमो भवति। अर्थात् ह्रस्वन्त, नद्यन्त तथा आबन्त प्रातिपदिक से परे आम् को नुट् का आगम होता है। यथा—राम+अम्=राम+नुट्+आम्= दीर्घ रामाणाम्।

४३४ **ह्रस्वस्य गुणः** ७।३।१०८ सम्बुद्धौ ७।१ ह्रस्वस्य ६।१ अङ्गस्य ६।१ गुणः १।१ स्यात्। सम्बुद्धौ परतः ह्रस्वान्तस्य अङ्गस्य गुणो भवति। अर्थात् सम्बुद्धि परे रहते ह्रस्वान्त अङ्ग को गुण होता है। हे अग्नि+सु=हे अग्ने+सु, सु लोप= हे अग्ने।

४३५ **हलः श्नः शानज्झौ** ३।१।८३ हौ परतः हलन्तात् धातोः परस्य श्ना प्रत्ययस्य स्थाने शानच् आदेशो भवति। अर्थात् हि परे रहते हलन्त धातु से परे श्ना प्रत्यय के स्थान में शानच् आदेश होता है। तथा—मुष्+हि=श्ना=शानच् =आन=मुषान हि लुक्=न को ण=मुषाण।

४३६ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं** हल् ६।१।६८ हल्ङ्याब्भ्यः ५।३ दीर्घात् ५।१ सु ति सि अपृक्तं १।१ हल् १।१ लुप्यते। हलन्तात्, ङ्यन्तात्, आबन्ताच्च दीर्घात् परं सु ति सि एतदपृक्तं हल् लुप्यते। अर्थात् हलन्त ङ्यन्त तथा आबन्त जो दीर्घ उससे सु ति सि के अपृक्त हल् का लोप होता है। यथा —कुमारी+सु=स् स् लोप =कुमारी।

४३७ **हलन्त्यम्** १।३।२ उपदेशे ७।१ अन्त्यम् १।१ हल् १।१ इत् १।१ स्यात्। उपदेशेऽन्त्यं हलित् स्यात्। अर्थात् उपदेश अवस्था में जो अन्तिम हल् उसकी इत् संज्ञा होती है। यथा—अ इ उ ण में ण की इत् संज्ञा हुई।

४३८ **हलादिः शेषः** ७।४।६० अभ्यासस्य ६।१ आदिः १।१ हल् १।१ शेषः १।१ भवति । अभ्यासस्य आदिः हल् १।१ शिष्यते अन्यः लुप्यते । अर्थात् अभ्यास का आदि हल् शेष रहता है अन्य का लोप होता है । यथा = अट् + अ = द्वित्व = अभ्यास संज्ञा टलोप दीर्घ = आट ।

४३९ **हलि च** ८।२।७७ हलि ७।१ र्वोः ६।२ धात्वोः ६।२ उपधायाः ६।१ इकः ६।१ दीर्घः १।१ स्यात् । हलि च परतो रेफवकारान्तस्य धातोरुपधाया इको दीर्घो भवति । यथा—दिव् + ति = दिव् + श्यन् + ति = दीव्यति ।

४४० **हलि लोपः** ७।२।११३ हलि ७।१ विभक्तौ ७।१ इदमः ६।१ इदः ६।१ लोपः १।१ स्यात् । इदमोऽककारस्य इदरूपस्य लोपो भवति हलादौ विभक्तौ परतः । अर्थात् हलादि विभक्ति परे रहते ककार रहित इदम् शब्द के इद् भाग का लोप होता है । यथा—इदम् + भ्याम् = इद् लोप = अ + भ्याम् = दीर्घ = आभ्याम् ।

४४१ **हलि सर्वेषाम्** ८।३।२२ हलि परतः ७।१ भो भगो अघो अपूर्वस्य ६।१ पदान्तस्य ६।१ यकारस्य ६।१ सर्वेषाम् आचार्याणाम् ६।१ मते लोपः । भो भगो अघो अपूर्वस्य पदान्तस्य यकारस्य हलि परतः सर्वेषाम् आचार्याणाम् मते लोपो भवति । अर्थात् भो भगो अघो तथा अवर्ण पूर्व वाले पदान्त यकार का लोप होता है हल् परे रहने पर सभी आचार्यों के मत में । यथा भो हसति ।

४४२ **हशि च** ६।१।११४ हशि ७।१ अप्लुतात् ५।१ अतः ५।१ रोः ६।१ उत् १।१ भवति । हशि परतः । अत उत्तरस्य रोरुकारादेशो भवति । अर्थात् हश् परे रहते अकार से परे रु को उ होता है । यथा—शिव + रु = वन्द्यः = शिव + उ + वन्द्यः गुण —शिवो वन्द्यः ।

४४३ **हिनुमीना** ८।४।१५ हिनु मीना इत्येतयोः उपसर्गस्थात् निमित्तात् परस्य नकारस्य णकारादेशो भवति । अर्थात् उपसर्ग में स्थित निमित्त से परे हिनु तथा मीना के नकार को णकार होता है । यथा—प्रहिणुतः, प्रमीणाति ।

४४४ **हुझल्भ्यो हेर्धिः** ६।४।१०१ हुझल्भ्यः ५।१ हेः ६।१ दीर्घः १।१ हु इत्येतस्मात् झलादेश्च परस्य हलादेर्हेः स्थाने धि इति आदेशो भवति । अर्थात् हु तथा झलन्त से परे हलादि हि के स्थान पर धि आदेश होता है । यथा—भिनद् + हि = भिन्द् + हि = भिन्द्धि ।

४४५ **हुश्नुवोः सार्वधातुके** ६।४।८७ अजादौ सार्वधातुके ७।१ हुश्नुवोः ६।२ यण् १।१ हु इत्येतस्य श्नुप्रत्ययान्तस्य च अनेकाचोऽङ्गस्य योऽसंयोगपूर्व उकारस्तस्य स्थाने यणादेशो भवति अजादौ सार्वधातुके परतः । अर्थात् अजादि सार्वधातुक

प्रत्यय परे रहते हु तथा श्नु प्रत्ययान्त अनेकाच् अङ्ग को संयोग पूर्व में नहीं है जिसके ऐसा जो उवर्ण उसको यणादेश होता है। यथा=सु+अन्ति=सु+नु+अन्ति=सुन्वन्ति ।

४४६ **हेतुमति च** ३।१।२६ धातोः ५।१ हेतुमति अर्थे ७।१ णिच् प्रत्ययः १।१ स्यात् । हेतुमति अभिधेये धातोर्णिच् प्रत्ययो भवति। [स्वतन्त्र कर्ता को प्रेरणा देने वाले को णिच् प्रत्यय होता है। उसका व्यापार करना हेतु हेतुमान् हुआ] उस हेतुमान् के अभिधेय होने पर धातु से णिच् प्रत्यय होता है। यथा—देवदत्तः कटं करोति तं यज्ञदत्तः प्रेरयति इति कटं कारयति यज्ञदत्तः देवदत्तेन। कृ+णिच् =इ=वृद्धि कारि धातु संज्ञा=अ=गुण=अयादेश कारयति।

४४७ **हो हन्तेर्ञ्णिन्नेषु** ७।३।५४ हन्तेर्हकारस्य स्थाने कवर्गादेशो भवति। ञिति णिति प्रत्यये नकारे च परतः अर्थात् ञित् णित् प्रत्यय तथा नकार परे रहते हन् धातु के हकार के स्थान में कवर्गादेश होता है। हन्+अक्=कुत्व=न को त, उपधावृद्धि=घातकः ।

---

## कुछ फुटकल अतिरिक्त सूत्र

### आ

४४८ **आदिरन्त्येन सहेता** १।१।७१ आदिः १।१ अन्त्येन ३।१ सह (अ०) इता ३।१ स्वस्य ६।१ च (अ०) अन्त्येन इता सहितः आदिः मध्यानां स्वस्य च ग्राहकः स्यात् अर्थात् अन्त्य इत् के साथ आदि बीच के वर्णों का और अपना भी ग्रहण करता है। जैसे अइउण् सूत्र में आदि अ और बीच के इ उ की अन्तिम इत् के साथ अण् संज्ञा हुई।

४४९ **आभीक्ष्ण्ये णमुल् च** ३।४।२२ आभीक्ष्ण्ये ७।१ णमुल् १।१ धातोः आभीक्ष्ण्ये (पौनःपुन्ये अर्थे) णमुल् प्रत्ययः परः भवति। धातु से बारंबार अर्थ में णमुल् प्रत्यय होता है जैसे स्मारं स्मारं नमति शिवम् । पुनः पुनः स्मरण करके शिव को नमस्कार करता है।

४५० **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ७।१।२ प्रत्ययादीनाम् फ ढ ख छ घ इत्येतेषाम् वर्णानां स्थाने आयन् एय् ईन् ईय् इय् इत्येते आदेशा भवन्ति। अर्थात् प्रत्यय के आदि में स्थित फ ढ ख छ घ के स्थान में आयन् एय् ईन् ईय् इय् ये आदेश क्रमशः होते हैं।

जैसे : दक्षिण+फ = आयन् = दाक्षिणायन। कुल+ख=ईन्=कुलीन आदि।

४५१ एकः पूर्व-परयोः ६।१।८४ एकः १।१ पूर्वपरयोः ६।२ अधिकार-सूत्रम् इदम्। ६।१।८४ इत आरभ्य ६।१।१११ यावत् गच्छति। यह अधिकार सूत्र ६।१।१११ तक जाता है।

जैसे उप+इन्द्रः=उपेन्द्रः यहाँ आद्गुणः ६।१।८७ से पूर्व 'अ' और पर 'इ' दोनों के स्थान पर 'ए' गुण आदेश हुआ।



४५२ एच इग्घ्रस्वादेशे १।१।४८ ह्रस्वादेशे ७।१ एचः ६।१ इक् १।१ भवति। ह्रस्वादेशे एचः स्थाने इक् भवति। अर्थात् ह्रस्व करने में एच् की जगह इक् होता है।

जैसे प्रै=प्रि+सु=प्रि।

---

त

४५३ त्वान्तं नपुंसकम् त्वान्तं प्रातिपदिकं नपुंसकं भवति अर्थात् त्व जिसके अन्त में होता है ऐसा प्रातिपदिक नपुंसक लिङ्ग होता है। यथा—मानवत्वम्।

इति तत्रभवद्भिः आचार्यप्रवरैः श्रीरामप्रकाश
भारद्वाजशास्त्रिमहाभागैः विरचिता
अजादि-हलादि-सूत्राणां पूर्णी नाम्नी व्याख्या समाप्ता।

